त्वं कालमायायमसंसृतिभ्यो महाभयात्पातुमेकः समर्थः ।
भक्तापराधाननवेक्षमाणो महादयालुः किल भक्तवत्सलः ॥ १८ ॥
धृतावतारस्य हि नाममात्रं रूपञ्च वा यः स्मरेदन्तकाले ।
सोऽपि प्रभो! घोरमहाघसंघातसद्यो विमुक्तो दिवमाशु याति ॥ १९ ॥
तं त्वां विहायाऽत्र तु यो मनुष्यो देहे त्रिधातावपि दैहिकेषु ।
जायाऽऽत्मजज्ञातिधनेषु सज्जते स मायया वञ्चित एव मूढः ॥ २० ॥
त्वद्भक्तियोग्यो नरदेह एव यं कामयन्तेऽपि च नाकसंस्थाः ।
त्वद्भक्तिहीनं हि दिवोऽपि सौख्यमहं तु जाने नरकेण तुल्यम् ॥ २१ ॥
तपस्त्रिलोक्याः कुरुषे सुखाय तत्रापि ते भारतवासिपुंसु ।
अनुग्रहो भूरितरो यदत्र कृतावतारो विचरन्विराजसे ॥ २२ ॥
तस्याऽऽश्रयं ये तव नाऽत्र कुर्वते त एव शास्त्रेषु मताः कृतघ्नाः ।
अतस्तवैकाश्रयमेव बाढं कुर्वत्यजस्रं मयि तेऽस्तु तुष्टिः ॥ २३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये श्रीनरनारायणस्तुतिनिरूपणं नामैक-त्रिंशोऽध्यायः ॥ ३१ ॥

---

# द्वात्रिंशोऽध्यायः

## ग्रन्थसम्प्रदायप्रवृत्तिनिरूपणम्

स्कन्द उवाच

...तमीशानंनारदःसययौततः । शम्याप्रासाभिधंब्रह्मन्व्यासस्याश्रममादितः
...स्तेन प्रत्युत्थानासनादिभिः । तस्माएकान्तिकंधर्मं प्राहजिज्ञासवेसच

ततो ब्रह्मसभां गत्वा ब्रह्मणः शृण्वतो मुनिः।
देवान्पितॄन्महर्षींश्च तत्रस्थांस्तमुपादिशत् ॥ ३ ॥

तत्र स्थितो भास्करश्च धर्ममेतं पुनर्म्मुने। शुश्राव नारदात्सर्वं श्रुतं नारायणात्पुरा ॥

स प्राहाऽऽत्माग्रयायिभ्यो वालखिल्येभ्य आदरात्।
मेरौ ते सङ्गतान्देवानिन्द्रादींश्च न्यशामयन् ॥ ५ ॥
तेभ्योऽसितो मुनिः श्रुत्वा धर्ममेतं द्विजोत्तम !।
पितृभ्यः कथयामास पितृलोकं गतः क्वचित् ॥ ६ ॥

पितरस्ते त्वर्यमाद्या ऊचिरे शन्तुनं नृतम्। स भीष्मायस्वपुत्रायकथयामासतत्त्वतः
सोऽपि भारतयुद्धान्ते धर्म्मराजाय पृच्छते। शयानः शरशय्यायां प्राह संसदि भूयसि
तत्र श्रुत्वा नारदोऽपि स्थितः सदसि सादरम्। कैलासे शङ्करं प्राह स च मां मुनिसत्तम
मया ते कथितं ब्रह्मन्पृच्छते धर्म्मवर्त्तिने। पात्रायैतत्प्रदातव्यमिति मां हि पिताऽब्रवीत्
येनयेन श्रुतं ह्येतन्माहात्म्यं सात्वताम्पतेः। स स तस्मिन्परां भक्तिं चकार स्वविमुक्तये

युधिष्ठिरोऽपि राजर्षिः श्रुत्वा भीष्मेण कीर्त्तितम्।
माहात्म्यं देवकीसूनोर्म्मुमुदे भ्रातृभिः सह ॥ १२ ॥

तमात्मनो मातुलेयं सर्वकारणकारणम्। निशम्याऽऽश्चर्य्यजलधौ निममज्ज महामतिः
वासुदेवादिकं व्यूहं वाराहादींश्च सर्व्वशः। अवतारानपि नृपो मेनेऽस्यैव रमापतेः ॥
ततः सहानुजो राजा दिव्यमानुषविग्रहे। अत्यन्तं भक्तिमान्कृष्णे बभूव द्विजसत्तम!
श्रुत्वेमां च कथां सर्व्वे ब्रह्मराजसुरर्षयः। सभायां तत्र ये चासंस्तेऽप्यभूवन्सविस्मयाः
कृष्णमेव परं ब्रह्म विदित्वा ते नराकृति। भक्तिं प्रपेदिरे तस्मिन्प्रणमन्तस्तमादरात्
इत्थं तस्याऽस्ति माहात्म्यमतस्त्वमपि सन्मते !। सर्वात्मना वासुदेवं तमेव भज भक्तितः
श्रीवासुदेवमाहात्म्यमेतत्ते कथितं मया। दुर्वासनोपशमनं भगवद्भक्तिवर्द्धनम् ॥
कथितानि पुराणेऽत्र मयाख्यानानि यानि ते। तेषां सारमिदं ब्रह्मन्निर्म्मथ्यैवा[illegible]
वेदोपनिषदां चैतद्रसो वै सांख्ययोगयोः। पञ्चरात्रस्य कृत्स्नस्य धर्म्मशा[illegible]
धन्यं यशस्यं चाऽऽयुष्यमेतत्परममङ्गलम्। साक्षाद्भगवता गीतं सर्वा[illegible]

य एतच्छृणुयात्पुण्यं कीर्तयेदथ यः पठेत् । वासुदेवे भवेत्तेषामचला निर्मला मतिः॥
भक्ता एकान्तिकास्ते च भवेयुस्तस्य मानवाः । ब्रह्मरूपाव्रजन्त्यन्तेब्रह्मधामतमःपरम्
धर्मार्थी लभतेऽनेन धर्मं कामं च कामुकः ।
धनार्थी धनमाप्नोति मोक्षार्थी मोक्षमुत्तमम् ॥ २५ ॥
लभेत विद्यां विद्यार्थी मुच्येद्रुग्णश्चरोगतः । एतच्छ्रवणमात्रेणसर्वपापक्षयो भवेत्
ब्राह्मं तेजो लभेद्विप्रः क्षत्रियश्चपरेशताम् । धनं वैश्यःसुखंशूद्रःश्रवणादस्यचाप्नुयात्
एतच्छ्रुत्वा रणं गच्छन्विजयं चाऽऽप्नुयान्नृपः ।
प्राप्नुयात्स्त्री च सौभाग्यं कन्या च स्वेप्सितं वरम् ॥ २८ ॥
एतस्य श्रुतिकीर्त्तिभ्यां शास्त्रजातशिरोमणेः । यं यं कामयेत्कामंतंतंप्राप्नोतिमानवः
तस्मात्त्वं सर्वदा भक्त्या पठन्नेतद् द्विजोत्तम ।
कायवाणीमनोभिस्तं भजेथा भक्तवत्सलम् ॥ ३० ॥

सौतिरुवाच

एतन्महासेनमुखाब्जनिःसृतं स्तावर्णिरापीय वचोऽमृतं सः ।
चकार भक्तिं वसुदेवनन्दने नराकृतिब्रह्मणि सर्वमङ्गले ॥ ३१ ॥
यूयं च सर्वे निगमागमज्ञा ब्रह्मण्यदेवं भजनीयमीशम् ।
भजध्वमेकं तमुदारकीर्त्तिं श्रीवासुदेवं निजधर्मसंस्थाः ॥ ३२ ॥
गोलोकधामपतये प्रकाशचयमूर्त्तये । नमोऽस्तु वासुदेवाय भक्त्याऽऽनन्दविवृद्धये ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे
वासुदेवमाहात्म्ये ग्रन्थसम्प्रदायप्रवृत्तिनिरूपणं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥
समाप्तमिदं वासुदेवमाहात्म्यम् ॥

इति श्रीस्कान्दे महापुराणे द्वितीयं वैष्णवखण्डं सम्पूर्णम् ॥ २ ॥

——:०:——

## विशेषतोऽवधेयम्

बदरिकाश्रममाहात्म्यस्याऽग्रे नारदपुराणीयस्कन्दमहापुराणस्थे तत्पुराणसूचिमध्ये मदनालसमाहात्म्यं धूम्रकोशाख्यानञ्च वर्तते अथ च मार्गशीर्षमाहात्म्यस्याऽग्रे द्वादशवनमाहात्म्यमस्ति। भागवतमाहात्म्यस्याऽग्रे माघमासमाहात्म्यस्वर्तते तत्तद् विशिष्ट-विशिष्ट हस्तलिखितग्रन्थसङ्ग्रहालयानां सर्वतोऽनुसन्धानेऽपि नैव वयं समर्थास्तत्प्राप्तौ। तदर्थं श्रीमद्विद्वद्धुरीणानां समक्षं साञ्जलि समभ्यर्थना यदग्रेपुनरनुसन्धानदिशायत्नेसफलेएतत्प्राप्तौ सत्यां परिशिष्टरूपेणग्रन्थेऽस्मिन्नविकलं प्रकाशनीयतासम्पद्येत।

{ विदुषाम्वशम्वदौ
सम्पादकौ
ब्रह्मदत्तत्रिवेदि रामनाथदाधीचौ



सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा

—:*:—

